॥ श्रीः ॥

# ॥ स्वातन्त्र्यदर्पणः ॥



बलजिन्नाथपण्डितविरचितः ।

प्राप्तिस्थान—ईश्वर कौल चौक हब्बाकदल ।

मुद्रक :–

ओकाज प्रेस श्रीनगर ।



मूल्य ५० न पै

Svatantrya darpana

॥श्रीः॥

# ॥ स्वातन्त्र्यदर्पणः ॥

( बलजिन्नाथविरचितः )

ॐ

अथ प्रथममाह्निकमुपोद्घाताख्यम्—

विश्वमिदं सुविचित्रं यो ह्यविचित्रः प्रकाशन् देवः ।
जयति स हि मे प्रसीदतु शक्तिघनः कोऽपि पूर्णपरमेशः ॥१॥

आरभमाणः सततं निरुपादानं स्वतो जगत् सकलम् ।
शक्त्या स्वयापरिणमन् बिभ्रत् प्रतिबिम्बकल्पमिव विश्वम् ॥२॥

स्वप्नभ्रमतुल्यमिदं निखिलं चाभासयन् विकल्पकुलम् ।
स्वस्वातन्त्र्यमहिम्ना जयति हि विलसन् स कोऽपि परमेशः ॥३॥

अधिकारिभेदभिन्नं निखिलं सच्छास्त्रजालमपि यस्य ।
लीलानुग्रहरूपं शास्त्ररहस्यं स मे प्रकाशयतु ॥४॥

येषां रतिर्महेशे गतिर्न शास्त्रेष्वतीवगहनेषु ।
तेषां सुखबोधार्थं ललितं शास्त्रं विरच्यते शैवम् ॥५॥

देवेन शैवशास्त्रं मानवलोकेऽवतारितं त्रैधम् ।
श्रीनाथीयं द्वैताद्वैतं द्वैतं त्वमर्दकीयं हि ॥६॥

अद्वैतशैवशास्त्रं भगवद्दुर्वाससो वदनकमलात् ।
सरहस्यं सोपायं सिद्धः सम्प्राप त्र्यम्बकादित्यः ॥७॥

तद्वंशे शोडशकः पुत्रो नाम्ना तु सङ्गमादित्यः ।
तीर्थायटन् द्विजन्मा न्यविशत कश्मीरमण्डलं रम्यम् ॥८॥

तत्सन्ततौ बभूवुर्मठिकागुरवो यशस्विनस्तेषु ।
तुर्यः सोमानन्दश्चक्रे शिवदृष्टिनामकं शास्त्रम् ॥९॥

उत्पलदेवः शिष्यस्तस्य ग्रन्थांश्च प्रत्यभिज्ञादीन् ।
व्याख्यातवांश्च शास्त्राण्यभिनवगुप्तः प्रशिष्यकस्तस्य ॥१०॥

ग्रन्थांश्च बहून् कृतवांस्तन्त्रालोकादिनामकान् रुचिरान् ।
बहवस्तस्य च शिष्याः परम्परायां गताश्च साक्षाच्च ॥११॥

अन्ये च सिद्धपुरुषा वसुगुप्तककल्लटादिगुरवोऽत्र ।
शास्त्राणि च टीकाश्चारचयन् खलु भूरिशः कृपानुन्नाः ॥१२॥

अभ्यस्य वाङ्मयं तत् सुविमृश्य मुहुर्धिया स्वया सुचिरम् ।
श्रुत्वा श्रीगुरुवदनाद् गूढं तत्त्वं विरच्यते शास्त्रम् ॥१३॥

इति प्रथममाह्निकम्

अथ परमशिवनिरूपणाख्यं द्वितीयमाह्निकम्—

स्वातन्त्र्यं सुखमूलं योनिर्दुःखस्य पारतन्त्र्यं हि ।
स्वातन्त्र्यमेव भुक्तिं मुक्तिं चैवाप्यलं सदा दातुम् ॥१॥

परमेश्वरः स्वतन्त्रः सर्वस्यात्मा सदा स्वतःसिद्धः ।
शास्त्रालोकस्तु परं प्रहाणये मोहजालतिमिरस्य ॥२॥

यद्यल्लोके सिद्धं तत्तत्सर्वं प्रकाशमाहात्म्यात् ।
स्वमहिम्नैव तु सिद्धः सिद्धेर्मूलं सदा प्रकाशोऽसौ ॥३॥

बहुविधवैचित्र्येण प्रकाशमानेषु विषयनिकरेषु ।
स्फटिकोपलवत् स्वच्छे नैव भिदा कापि तु प्रकाशे स्यात् ॥४॥

स्फटिको जड एव परं नैव स संवेत्ति येन सत्त्वं स्वम् ।
विमृशति सदा प्रकाशः स्वयमेव स्वं विमर्शसारत्वात् ॥५॥

रूपं निजं प्रकाशो विमर्शशून्यस्त्यजेत् प्रकाशत्वम् ।
एवं तथा विमर्शः प्रकाशशून्यस्त्यजेन्निजं सत्त्वम् ॥६॥

नामद्वयमेकस्य प्रबोधनार्थं तु वस्तुनः कलितम् ।
अविनाभावनिबद्धौ काशविमर्शौ परस्परस्यात्मा ॥७॥

संविन्मयः स आत्मा समरसरूपस्तयोः स्वतः सिद्धः ।
ज्ञानक्रियास्वतन्त्रः केनापह्नूयतां कथं नाम ॥८॥

स्वातन्त्र्यात् परमेशः स्वभावतोऽसौ समुच्छलद्रूपः ।
तस्य समुच्छलनं यत् तदेव विश्वं शिवादिभूम्यन्तम् ॥९॥

परमेशतां च तस्य स्वतन्त्रतां कः कथं स्फुटं ब्रूयात् ।
स्पन्दः स्फूर्तिर्घूर्णिः सिद्धैरित्थं ततः सुनिर्दिष्टा ॥१०॥

अचलस्यापि चलते वान्तःसंरम्भरूपिणीव रुचिः ।
सा तस्यां विश्रान्तिर्याऽऽनन्दोऽसौ परो महेशस्य ॥११॥

अनया विना महेशोऽस्थास्यत् कूटस्थ एक एव सदा ।
अस्थास्यदपि न वाऽसावकरिष्यन्निर्णयं तथा को वा ॥१२॥

इत्थं महेश्वरत्वं सोऽत्यक्ष्यदचेतनो भवन् शून्यः ।
न परं तथा स देवः सत्ताऽऽनन्दः सदाहमिति तस्य ॥१३॥

चितिमात्रो हि यतोऽसौ प्रकाशमानश्चितेः प्रकाशत्वात् ।
प्रत्यवमर्शसतत्त्वाहमिति चितिश्चापि यन्निसर्गवशात् ॥१४॥

अहमिति परिपूर्णोऽसौ शिवादिभूम्यन्ततत्त्वजातेन ।
सर्वं च तत्र शुद्धं संविद्रूपं सुसमरसाकारम् ॥१५॥

तत एव च तच्छक्त्या प्रभवति सर्वं प्रलीयते तत्र ।
सर्गादिशक्तिरेषा शून्यजडाभ्यां प्रभोर्विलक्षणता ॥१६॥

एतत् सत्कार्यत्वं यथार्थतः सम्मतं सदा सिद्धैः ।
प्राधानिकपरिणामाद् यत्त्वपरं बालसम्मतं तत्तु ॥१७॥

इति द्वितीयमाह्निकम्

अथ तत्त्वनिरूपणं नाम तृतीयमाह्निकम्—

स्वानन्दनिर्भरोऽसौ स्वात्मोल्लासेच्छया समाविष्टः ।
आनन्दत्वेन शिवः शक्तिश्चेच्छामयत्वतः कथितः ॥१॥

स शिवः प्रकाशरूपो विमर्शरूपश्च कथ्यते शक्तिः ।
अभिधानमात्रभिन्नः सम्बोधार्थं न वस्तुतो भिन्नः ॥२॥

विश्वोत्तीर्णः स शिवो विश्वमयत्वे स एव शक्तिरिति ।
व्यवहारमात्रमेतन्नैव हि शक्तिः शिवात् क्वचिद्भिन्ना ॥३॥

स्वातन्त्र्यमेव शक्तिः शिवनाथस्य स्वतो यया सूते ।
निरुपादानं विश्वं सैव शिवत्वप्रयोजिका तस्य ॥४॥

शक्तिः शिवस्य शिवता शक्तेः शिव एव चास्ति शक्तित्वम् ।
दाहादिशक्तिवह्न्योरिव शिवशक्त्योः सदैव तादात्म्यम् ॥५॥

शैवी स्वोल्लासेच्छा प्रथमं रूपद्वयेन दीव्यन्ती ।
ज्ञानं सदाशिवत्वे क्रियेश्वरत्वेऽवभात्यभिन्नापि ॥६॥

प्रथमा दशा निमेषः कथितः शास्त्रेषु चापरोन्मेषः ।
उभयत्र वर्तमाना शक्तिर्देवस्य शुद्धविद्याख्या ॥७॥

अहमिति पूर्णं पश्यन् शक्त्यन्तमभेदमूमिकां भजते ।
तदधो विद्यान्तमसौ भेदाभेदात्मिकां दशां शम्भुः ॥८॥

एतद्दशावतीर्णस्त्वहमिदमिति संविदञ्छिवः सकलम् ।
भेदाभेदमयीं तां दृष्टिं शुद्धां प्रकाशयति विद्याम् ॥९॥

मायाशक्तिः परमा शम्भोर्भेदावभासनोन्मुखता ।
ईशसदाशिवभूमाविदमंशो यद्दशान्मनाग् भाति ॥१०॥

स्वात्मावरणं शम्भोर्मायातत्त्वं पुनः समाख्यातम् ।
इदमिति सर्वं भिन्नं पश्यति शिव एव तत्प्रभावेण ॥११॥

जडमेव च देहादि स्वात्मत्वेनाभिमन्यते मोहात् ।
नैव च संवेत्ति निजं संवित्त्वं मायया परिच्छिन्नः ॥१२॥

कथितस्तत्र पुमाख्यः कञ्चुकषट्केन भाति सङ्कुचितः ।
कालः कला च विद्या रागो नियतिः स्वयं च माया तत् ॥१३॥

कालः क्रमस्वरूपो मातृत्वेनाभिमन्यमानस्य ।
जडदेहादेस्तेन क्रमिकत्वं स्यात्ततः प्रमेयस्य ॥१४॥

किञ्चिन्मात्रं ज्ञातुं कर्तुं वा यत्त्विहापि सामर्थ्यम् ।
सङ्कोचशालिनस्ते पुंसो विद्या कला च बोद्धव्ये ॥१५॥

निजदेहादौ तस्य प्रेयसि वस्तुनि च योऽस्त्यभिष्वङ्गः ।
सुगुणारोपणमय इव रागः पुंसस्त्वसौ समाख्यातः ॥१६॥

कर्त्तव्ये बोद्धव्ये सर्वत्र यया नियम्यते नियमैः ।
नियतिरसौ पुरुषस्य स्वातन्त्र्यनिरोधिनी प्रभोः शक्तिः ॥१७॥

एतत्कृतसङ्कोचो नानायोनिषु प्रमान् स संसरति ।
सुखदुःखभोगभागी स्वर्गे निरये च मर्त्यलोके च ॥१८॥

पतिरिति विद्याशक्त्योर्व्यवहारो मातरीह विख्यातः ।
मायायां पुनरणुरिति पशुरिति जीव इति चास्ति संसारे ॥१९॥

अवरोहलीलयेत्थं स्वल्पज्ञो जीव एकतो भवति ।
परमेश्वरस्त्वपरतः प्रकृतिः करणानि कार्यवर्गश्च ॥२०॥

एवं भवंश्च देवो नैव च्यवते मनागपि स्वीयात् ।
पूर्णात् परमशिवत्वाद् यत्तच्छैवं परं स्वतन्त्रत्वम् ॥२१॥

अन्तःकरणं त्रिविधं बाह्यं करणं च दशविधं प्रथितम् ।
सूक्ष्मस्थूलविभेदाद् द्विविधं कार्यं च पञ्चधा भिन्नम् ॥२२॥

कार्यकरणवर्गस्याविभागरूपा तु या दशा कापि ।
सैव निगदिता प्रकृतिः प्रधानमिति चाप्युदाहृता त्रिगुणा ॥२३॥

पत्युर्निजाङ्ककल्पे ज्ञानं विश्वत्र भावजाते यत् ।
सङ्कोचशालिनस्तत् सत्त्वं तु पशोः क्रिया तथैव रजः ॥२४॥

पत्युर्मायाशक्तिर्या सैव पशोस्तमोगुणो गदितः ।
भेदरसे पशुभावे गुणत्वमेषां परं न शक्तित्वम् ॥२५॥

सत्तानन्दः पत्युः सदास्त्यविच्छिन्न एव यः स पशोः ।
अस्ति हि यत्तत् सत्त्वं तस्याभावस्तमो रजो मिश्रम् २६॥

अत एव सुखं सत्त्वं तमश्च मोहोऽस्त्यभावरूपत्वात् ।
मिश्रं रजः प्रकाशाप्रकाशसम्भेदकं चलं दुःखम् ॥२७॥

पुंसः पृथिवीं यावत् सांख्ये शास्त्रे स्मृतानि तत्त्वानि ।
माहेश्वरे तु शास्त्रे कंचुकषट्कं शिवादयश्चापि ॥२८॥

संयोगादिर्द्रव्यं सामान्यं कालदिक्क्रियाप्रभृति ।
सम्बन्धरूपमखिलं भेदाभेदात्मकं परं नान्यत् ॥२९॥

भेदः कथं नु पूर्णे भाति तु विच्छेदभासनान्नूनम् ।
सेयमपोहनशक्तिः शम्भोर्विच्छेदभासनोन्मुखता ॥३०॥

भेदेऽवभासमाने ज्ञाता ज्ञेयं च भासते हि यया ।
सा ज्ञानशक्तिरस्याख्याता शास्त्रेष्वनन्तवैचित्र्या ॥३१॥

स्मर्ता स्मार्यं च यया बहुधा भातीह सा प्रभोः शक्तिः ।
स्मृतिरिति नाम्नाख्याता तिस्रो व्यवहारभित्तिभूता हि ॥३२॥

परमेश्वरः परा वाक् कथितः सिद्धैर्विमर्शसारत्वात् ।
ज्ञप्तिमये व्यवहारे सर्वत्र विमर्श एव वाक्तत्त्वम् ॥३३॥

भेदाभेददशायां क्रमरहिता वाङ् मता तु पश्यन्ती ।
बुद्धौ च मध्यमोक्ता वाचि बहिर्वैखरी समाख्याता ॥३ ॥

इति तृतीयमाह्निकम्

अथ माहैश्वर्यनिरूपणं नाम चतुर्थमाह्निकम् —

स्वविलासेन शिवस्य स्वभावविषयेऽथ विस्मृतिर्बन्धः ।
गुरुशास्त्रोपासनया प्रत्यवमर्शस्मृतिः पुनर्मुक्तिः ॥१॥

एवं कस्य नु बन्धः कस्य च मुक्तिः कुतश्च को मोच्यः ।
चित्रं शिवमयमखिलं बन्धो मोक्षः शिवस्य शिवतेयम् ॥२॥

बन्धोऽवरोहलीला मोक्षश्चारोहखेलनं शम्भोः ।
उभयस्य कल्पनेत्थं माहैश्वर्यं परं स्वतन्त्रत्वम् ॥३॥

षट्त्रिंशत्तत्त्वमये क्रीडन् विश्वत्र भावजातेऽसौ ।
परमेश्वरः स्वतन्त्रः स्वानन्दं विन्दतीव खलु कमपि ॥४॥

स्वस्मिन्स्समतलफलके स्वेनैव स्निग्धवर्णविभवेन ।
रचयञ्छिवः स्वतन्त्रः शक्तिघनो विश्वचित्रमतिचित्रम् ॥५॥

कवयंश्च विश्वकाव्यं नटयंश्चेदं सदा जगन्नाट्यम् ।
परमेश्वरो विजयते रसयन् सततं निजं रसं कमपि ॥६॥

कथमिव चिन्मात्रोऽसौ यायाज्जडतां परां धरादिमयीम् ।
अद्वैतमात्ररूपो यायाद् द्वैतं कथं नु सुविचित्रम् ॥७॥

आनन्दमात्रमूर्तिर्भुञ्जीत कथं भवं महादुःखम् ।
संसारादुत्तीर्णः कथमिव कष्टं स संहरेन्नु शिवः ॥८॥

अविकल्पश्च सदासौ विकल्पमयतां कथं पुनर्यायात् ।
अणुतां व्रजेच्च पूर्णः कथमिव मलिनो भवेत् सदाशुद्धः ॥९॥

परमेतत् स्वातन्त्र्यं तस्याघटनीयघटनसामर्थ्यम् ।
एषैव तस्य शक्तिर्यया शिवत्वं स निर्वहेत् परमम् ॥१०॥

एतन्महेश्वरत्वं वैलक्षण्यं शिवस्य यच्छून्यात् ।
भूषणमेतन्निखिलं दूषणमिव सम्मतं परं बालैः ॥११॥

पञ्चविधत्वं शास्त्रे माहैश्वर्यस्य सम्मतं शैवे ।
सृष्टिस्थितिसंहारा अपिधानमनुग्रहश्च तद्भेदाः ॥१२॥

पञ्चेमानि हि शम्भोः कृत्यानि सदा निरर्गलानीह ।
प्रचलन्ति भावजाते सततं सुविचित्ररूपया शक्त्या ॥१३॥

भोगानां दासत्वं भजमानोऽधः पतन् पशुर्नित्यम् ।
परमेश्वरं निषेधेन्निन्देच्छास्त्रं गुरुं च यन्मोहात् ॥१४॥

स्वस्यैवैतच्छम्भोः पिधानकत्यस्य जृम्भितं नान्यत् ।
स्वस्वातन्त्र्यमहिम्ना तिरोहितं तेन यन्निजं तत्त्वम् ॥१५॥

सुचिरं संसृत्यैवं कदाचिदालम्ब्य शास्त्रगुरुवाक्यम् ।
प्रत्यभिजानाति निजं शिवस्वभावं स्वनुग्रहाच्छैवात् ॥१६॥

इति चतुर्थमाह्निकम् ।

अथ नास्तिकवादपरीक्षणं नाम पञ्चममाह्निकम्

निग्रहशक्तेर्महिमा नास्तिकवादादिकलिकलुषवृद्धिः ।
अनया महेशशक्त्या निगृहीता मानवा वदन्तीत्थम् ॥१॥
देहगणश्चैतन्यं देहादतिरिच्यते न कोऽप्यात्मा ।
नैवास्ति कश्चिदीशो नापि पुनर्जन्मपुण्यपापादि ॥२॥

स्वयमेव भूतजातं विचित्रभुवनादिरूपतां धत्ते ।
तत्रापि मनुजदेहाः सर्वश्रेष्ठा विनैव सन्देहम् ॥३॥

अत एव मनुजसौख्यं जगतो लक्ष्यं प्रमुख्यमिति वेद्यम् ।
सौख्याय मनुष्याणामधिकारे निर्विशेषता न्याय्या ॥४॥

सकलं जगद्विधानं सञ्चाल्यं तेन वै प्रकारेण ।
येन निखिलजनतायाः सौख्यं निर्बाधतामियात् सुसमम् ॥५॥

सौख्याय च यतनीयं त्याज्यं धर्मादिचिन्तनं वितथम् ।
ईश्वरचिन्ता ज्ञेया भीरूणां बालकल्पनाकल्पा ॥६॥
कर्म न किञ्चिद् धर्म्यं नैवाधर्म्यं कदापि मन्तव्यम् ।
येन सुखं जनतायाः सम्भाव्यं तत् सदैव करणीयम् ॥७॥

सकलमनुजसुखहेतोर्यत्नः शैवे सुसम्मतो नूनम् ।
शेषो यस्सिद्धान्तो नास्तिकवादस्य नैव युक्तोऽसौ ॥८॥

देहाद्यतिरिक्तो हि स्वात्मा मानुष्यकस्य सर्वस्य ।
सुप्ते तुर्ये च पदे संविदितश्चिन्मयः स्वयं नूनम् ॥९॥
भूतानां तु जडत्वात् प्रवृत्तिजाते प्रयोजनं नैव ।
अनुसन्धातुं शक्यं नैव ततश्चित्रविश्वभावजनिः ॥१०॥

अर्थक्रियानुकूलं विचित्रतनुकरणलोकजातं यत् ।
अनुमापयेत् किमपि तद् बुद्धिविभवशालि कारणं त्वजडम् ॥११॥

स्वप्नमनोराज्यादावीश्वरता परिमिता स्फुटा स्वीया ।
सकलजगत्सृष्टचादावमिता परमेशतानुमातव्या ॥१२॥

एकजतकजननीनामविशेषपरिस्थितौ प्रवृद्धानाम् ।
जीवानां चित्तादेर्वैचित्र्यमकारणं कथं नु भवेत् ॥१३॥

अनुमातव्याश्च ततः प्रक्तनकर्मादिवासनाश्चित्राः ।
योगाद्यभ्यासवशाज्जातिस्मरणं प्रमाणमपरं च ॥१४॥

पर्यन्ते विरसत्वाद् दुष्पूरत्वाच्च वासनावह्नेः ।
कीटाद्यविशेषत्वाद् विषयसुखं न प्रयोजनं सुधियाम् ॥१५॥

सुखिनामपि मनुजानां ध्रुवो हि मृत्युः सदैव पर्यन्ते ।
चरमं लक्ष्यं मरणम् स्वीकार्यं तेन जन्मनो ह्यवशम् ॥१६॥

तच्च सुखे दुःखे वा समं विजेतुं तदेव सन्मतिभिः ।
विषयसुखादतिरिते धर्मादौ चापि साधु यतनीम् ॥१६॥

साम्येऽपि हि वैषम्यं नोपेक्ष्यं चित्रवासनाजन्यम् ।
साम्ये वैषम्ये वा नैव ततश्शोभनो पराकाष्ठा ॥१८॥

इति पञ्चममाह्निकम् ।

अथ वादान्तरदिग्दर्शनं नाम षष्ठमाह्निकम् :—

महिमानुग्रहशक्तेः परमेशस्यात्र मुख्यतो द्विविधः ।
आविर्भावस्तु गुरोः प्रथमः शास्त्रस्य चापरो ज्ञेयः ॥१॥

परमानुग्रहनुन्नैर्बहुधा गुरुभिस्तु शास्त्रमुपदिष्टम् ।
अद्वैतं द्वैतं च द्वैताद्वैतं तथा समवलम्ब्य ॥२॥

स्वल्पमतीनां द्वैतं द्वैताद्वैतं ततः प्रवृद्धानाम् ।
धीराणां चाद्वैतं सम्बोधार्थं समाश्रितं गुरुभिः ॥३॥

उपदेशस्य प्रकाराश्चत्वारो मुख्यतो मतास्सद्भिः ।
यानाश्रितानि शास्त्राण्यंशांशतयाऽथवा सुपूर्णतया ॥४॥

तत्रैकोऽस्त्यारम्भः परिणामोऽस्ति द्वितीयको वादः ।
आभासोस्ति तृतीयस्तुर्यः स्वातन्त्र्यमेव सिद्धान्तः ॥५॥

अत्रानुग्रहलीलां चित्रां पश्यन्ति भक्तिरससरसिकाः ।
निग्रहनीरसहृदया विवदन्ते तर्ककर्कशैः कलहैः ॥६॥

शिष्यमतेवचित्र्याद् युक्ताः पूर्वे त्रयोऽप्यमी वादाः ।
तुष्टिकरस्तीक्ष्णधियां तथापि रम्यस्तुरीयसिद्धान्तः ॥७॥

भेददृशस्त्वारम्भे रक्ताश्च विवेकिनोऽपि परिणामे ।
आभासेऽतिविरक्ताः स्वातन्त्र्ये च प्रकृष्टभक्तियुताः ॥८॥

ईश्वर इह सर्वज्ञो जीवानां भुक्तिमुक्तिदो विश्वम् ।
परमाणूपादानं कर्मनिमित्तं कुलालवत् सृजति ॥९॥

अत्रान्तर्जीवात्मा तत्त्वज्ञानं यदा परं लभते ।
भवति तदा कूटस्थो ज्ञानसुखादिविशेषगुणविरतः ॥१०॥

इयमेव तस्य मुक्तिः परोपकारे रतस्तु परमात्मा ।
सृष्टिस्थितिसंहारान् कुर्वन्नारम्भकारितां भजते ॥११॥

प्रकृतिर्जडा त्रिगुणका रजसा चाञ्चल्यशालिनी भवति ।
पुरुषस्यार्थं च ततो भजते बुद्ध्यादिनेह परिणामम् ॥१२॥

चैतन्यमात्रतत्त्वाः स्वं प्रतिबिम्बं च बुद्धिगं दृष्ट्वा ।
अविवेकहताः पुरुषा भजमानाः साक्षिभावमपि तत्र ॥१३॥

गणयन्ति बुद्धिधर्मान् सर्वान् स्वीयांस्ततो ह्यमी बद्धाः ।
पुरुषप्रतिबिम्बबलाद् बुद्धिस्त्वजडेव भासते नूनम् ॥१४॥

अविवेकवशादेवं चलति हि परिणामसन्ततिर्विश्वम् ।
ख्याति यदा तु विवेकः प्रकृतिर्विरता तदा स्वयं भवति ॥१५॥

त्यजति ततः साक्षित्वं पुरुषः प्रकृतौ भवत्युदासीनः ।
इयमेव तस्य मुक्तिः कथिता परिणामवादिभिः सुजनैः ॥१६॥

गन्धर्वनगरकल्पं त्वनाद्ययाऽविद्यया जगद्भाति ।
जीवस्य सापि मिथ्याऽविद्या नूनं न चापि निर्वाच्या ॥१७॥

ब्रह्मैवैकं सत्यं शान्तं नित्यं च सच्चिदानन्दम् ।
मायापि हि सा मिथ्या यया त्विदं भाति भेदवैचित्र्यम् ॥१८॥

निश्चित्यैवं सम्यग् ब्रह्मणि जीवस्तदा लयं याति ।
इत्येषोऽस्त्याभासो वादो वैवर्तिकोऽत्र वेदान्तः ॥१९॥

बौद्धानां राद्धान्ते शून्यं सर्वं सदैव पर्यन्ते ।
नास्ति ब्रह्म न जीवो नैव स्थूलं जगन्न वा प्रकृतिः ॥२०॥

क्षणिक हि तु विज्ञानं प्रवहत् सन्तानरूपतां गच्छत् ।
अहमित्यभिमानपदं तस्याकाराः प्रमेयजातानि ॥२१॥

मिथ्याज्ञाननिमित्ता विज्ञाने वासना अनाद्या याः ।
ताभिः खलु बिज्ञानं सन्तत्या वहति येन संसरणम् ॥२२॥

निश्चित्य तु शून्यत्वं परमार्थत्वेन सर्वभावानाम् ।
क्लेशक्षयादिपूर्वं विरज्य देहं त्यजेत्तु विज्ञानम् ॥२३॥

क्षणिकं न हि सन्तानं जनयेन्निर्वाणशून्यतां गच्छेत् ।
इत्थं तेषां मुक्तिः स्वात्मोच्छेदेन शून्यताभावः ॥२४॥

इति षष्ठमाह्निकम् ।

अथ वादान्तरदोषप्रदर्शनं नाम सप्तममाह्निकम्—

एवं त्रयोऽपि वादा आरम्भाद्या समासतो वेद्याः ।
कियताऽप्यंशेनैते युक्ताः सर्वे न सर्वथा युक्ताः ॥१॥

भिन्नां प्राजापत्यां सृष्टिं यावत्त्वबाध आरम्भः ।
कार्यकरणवर्गस्य प्रधानतो युक्त एव परिणामः ॥२॥

सर्वस्य विकल्पस्यावस्तुत्वेनैव साधुराभासः ।
त्रितयस्य परं बीजं पर्यन्ते यत्तु तत् स्वतन्त्रत्वम् ॥३॥

परमाणुत्वमसिद्धं सततं परमात्मनोऽस्वतन्त्रत्वम् ।
मुक्तिश्च जाड्यकल्पाऽऽरम्भेऽसिद्धस्तथावयविभावः ॥४॥

प्रकृतिर्जडा स्वभावात् कथं विचित्रं जगत् स्वयं जनयेत् ।
पुरुषोऽपि नभःकल्पो नैवं तुष्टिप्रदोऽस्ति परिणामः ॥५॥

सर्वं यदास्ति मिथ्या कस्य कुतो वास्ति हा ! प्रपञ्चोऽयम् ।
कस्य कुतश्चाविद्या भ्रान्त्यपि खलु सा कथं न निर्वाच्या ॥६॥

ब्रह्मापि चेत् स्वनिष्ठं शान्तं गगनोपमं तथास्पन्दम् ।
कानन्दताथ चित्ता सत्ता वाप्यस्य शून्यकल्पस्य ॥७॥

ब्रह्मैव च यदि सत्यं को जीवः का कुतश्च वा माया ।
नैवं हि तुष्टिकारी सूक्ष्मधियामस्ति वेदवादोऽयम् ॥८॥

आत्मास्थैर्यं दोषो क्षणिकत्वे ज्ञानसन्ततेर्मुख्यः ।
व्यवहारानुपपत्तिः स्वात्मोच्छेदस्तथा न योऽभीष्टः ॥९॥

इति सप्तममाह्निकम् ।

अथ स्वातन्त्र्यनिरूपणं नामाष्टमयह्निकम् —

स्वातन्त्र्यस्य हि तत्त्वं पूर्वं सामान्यतः समाख्यातम् ।
अधुना तु तस्य शेषः प्रपञ्चतो विस्तरेण कथनीयः ॥१॥

नैसर्गिकः स्वभावः शिवनाथस्य स्वतन्त्रता परमा ।
नापेक्षते यतोऽसौ किमपि परं पञ्चकृत्यसुविलासे ॥२॥

नैवाणून् न च कर्माण्यपेक्षते नैव वासना न रजः ।
नैवाप्यनाद्यविद्यां निरर्गलः स्वेच्छया स्वयं विलसन् ॥३॥

स्वातन्त्र्यस्य महिम्ना कल्पितमखिलं स्वतो महेशेन ।
बाला एव हि तत्तत् प्रहुर्जगतो निमित्तमिति नान्ये ॥४॥

परमार्थत आत्मैव प्रकाशरूपो विमर्शसारश्च ।
अहमिति सदावभासः सत्यः शेषं प्रकल्पितं सर्वम् ॥५॥

अद्वैतशुद्धसंविद्रूपः स्वात्मा त्वसौ स्वतः सिद्धः ।
विविधत्वकल्पनाया विरहादविकल्प एव मन्तव्यः ॥६॥

इदमिति विषयतया यत् संवृत्याऽऽभासते परं विश्वम् ।
परमार्थतो न तत् सन्नासत् तत् सर्वथापि मन्तव्यम् ॥७॥

अत एव हि संवृतिसद्विकल्पबुद्ध्यावभासमानं तत् ।
विविधत्वकल्पनेनापोहस्तत्रैव सम्भवेद् द्वैते ॥८॥

देहे बुद्धौ प्राणे शून्ये च मितेऽहमिति य आभासः ।
तद्भिन्नेभ्यो भेदात् सोऽपि विषयवद्विकल्पमय एव ॥९॥

आभास एव विश्वो व्यवहृतिविषयः सुसम्मतः सिद्धैः ।
आभासवादिनोऽत्राविद्यां हेतुं परं प्रकल्पन्ते ॥१०॥

स्वातन्त्र्यदर्शिनस्त्वाभासे हेतुं पुनर्महेशस्य ।
परमं यत् स्वातन्त्र्यं शक्तिघनत्वं तदेव मन्यन्ते ॥११॥

सत्यत्वमसत्यत्वं प्रपञ्चजातेऽत्र कल्पितं गुरुभिः ।
शिष्याणां बोधार्थं नैव तु परमार्थतोऽस्ति कापि भिदा ॥१२॥

भेदमये व्यवहारे त्विदमिति सत्यं हि भासते विश्वम् ।
भेदाभेददशायां सर्वं सत्यं निजाङ्गकल्पं च ॥१३॥

शुद्धोऽसौ व्यवहारोऽहन्ताच्छुरितत्वतस्त्विदन्तायाः ।
पूर्णाभेदपदस्थं सर्वं पूर्णं सदाहमिति सत्यं ॥१४॥

याथार्थ्येन तु सर्वं परमं सत्यं शिवत्वपरमार्थम् ।
पूर्णं स्वातन्त्र्यवशात् सदसद्व्यवहारभासने बीजम् ॥१५॥

वाचा बुद्ध्यागम्यं व्यवहारस्पर्शयोगतः शून्यम् ।
साक्षात्कार्यं स्वेन स्वयमेव स्वं ह्यनुत्तरं किमपि ॥१६॥

पूर्णः स्वयं स्वभावात् संविद्रूपः शिवः स्वतन्त्रोऽहम् ।
इत्येव हि परमार्थो नैव परं बुद्ध्यते तथा पशुभिः ॥१७॥

जीवदशास्ववरोहो बहुधा स्वातन्त्र्यकल्पितो हि यतः ।
कल्पितपशुताभूमौ द्विविधा स्वातन्त्र्यकल्पनापि पुनः ॥१८॥

परमार्थतया त्वेका योक्ता समनन्तरं स्वभावमयी ।
अपरा व्यवहारतया तस्यास्तत्त्वं प्रपञ्चतो ज्ञेयम् ॥१९॥

व्यवहारे परतन्त्रो नैव यतो रज्यतीह परमार्थे ।
तस्मात् पूर्वं प्राप्यं स्वन्तन्त्र्यं व्यावहारिकं सुजनैः ॥२०॥

तच्छारीरं हार्दं बौद्धं सद्राजनैतिकं चार्थम् ।
व्यक्तिगतं राष्ट्रगतँ परिवारगतं समाजलोकगतम् ॥२१॥

तत्रापि तु राष्ट्रगतं मुख्यं सर्वस्य भित्तिभूतत्वात् ।
राष्ट्रे खलु परतन्त्रे स्वातन्त्र्यं नैव लभ्यते किमपि ॥२२॥

तस्माद्राष्ट्रं पूर्वं कार्यं सुजनैः स्वतन्त्रताशालि ।
येनेतरविधमखिलं स्वातन्त्र्यं लभ्यतामियात् सुतराम् ॥२३॥

राष्ट्रे ततः स्वतन्त्रे प्राप्यं शेषं सदार्यजुष्टपथा ।
रक्तिः स्वभावभूते स्वातन्त्र्ये साधु वर्धनीया च ॥ ४॥

जीवे तु तदा देवः सदाशिवोऽनुग्रहं मनाक् कुरुते ।
रज्यति ततः स शास्त्रे गुरुशुश्रूषा प्रवृत्तिमपि लभते ॥२५॥

क्रमशश्चैवारोहन् घोरं प्रक्षाल्य चित्तमालिन्यम् ।
नैर्मल्यं समवाप्तो झगिति शिवत्वं निजं स संवेत्ति ॥२६॥

तत् संवेदनवशतः सकलं स्वविलासकल्पितं पश्यन् ।
स्वातन्त्र्यं परिपूर्णं भुञ्जानो जयति देहयोगेऽपि ॥२७॥

[illegible] एव ह धर्मफलं द्विविधं वैशेषिके समुपदिष्टम् ।
ईशावास्योपनिषद्वाक्यं चाप्येवमाह सुस्पष्टम् ॥२८॥

इति अष्टममाह्निकम् ।

अथ प्रमातृनिरूपणं नाम नवममाह्निकम् —

मालिन्यं यत् प्रोक्तं तत् स्वातन्त्र्यप्रकल्पनोल्लसितम् ।
स्वातन्त्र्यमेव हानिर्मालिन्यस्य त्रयश्च मलभेदाः ॥१॥

सङ्कोच आणवः स्यान्मायीयो भेददृष्टिरिति कथितः ।
कार्मस्तु पुण्यपापे संसृतिमूले मलत्रयं त्वेतत् ॥२॥

आरोहन्नवरोहन् स्वैरं मलतारतम्यतो देवः ।
सकलपदादकलान्ता भजतेऽमूर्मातृभूमिकाः सप्त ॥३॥

आदेवान्तं सकलास्त्रिमलजुषः संसृतौ सदा मग्नाः ।
प्रलयाकालाश्च शून्ये श्रान्ता मुक्ताश्च भाविकल्पान्तम् ॥४॥

शुद्धप्रकाशमात्राः स्पन्दनशून्याः परस्परं भिन्नाः ।
विज्ञानाकलनाम्ना विख्याताः शून्यकल्पपरमार्थाः ॥५॥

शुद्धाः संविद्रूपाः परस्परं भेदिनस्तथा वेद्यात् ।
विद्येश्वराः समुदितास्तेषां विद्या तथैव मायापि ॥६॥

ईश्वरतत्त्वसुनिष्ठा ये मन्त्रेशास्तु ते समाख्याताः ।
तदुपरि मन्त्रमहेशास्तत्त्वे सादाशिवे सुविश्रान्ताः ॥७॥

अकलोऽसौ शिवनाथो विलसति योऽनन्तशक्तिपरिपूर्णः ।
ब्राह्म्यादिशक्तिपातात् तस्य ब्रह्मादयो जगद्वन्द्याः ॥८॥

कर्मसु निरताः सकला बौद्धाः प्रलयाकलत्वपदभाजः ।
वेदान्तवादनिष्ठाः शान्ता विज्ञानकेवला बहुलम् ॥९॥

भागवताद्याः सिद्धा ज्ञेया विद्येश्वरास्ततः शैवाः ।
मन्त्रेशादकलान्ता मन्तव्यास्तारतम्यतः सद्भिः ॥१०॥

जीवनशक्तिः प्राणः स एव मातेह सर्वभूमिगतः ।
सकलादकलं यावद् विजृम्भते पञ्चभिर्निजैः रूपैः ॥११॥

कायिकवाचिकबौद्धास्त्यगाः प्राणो ग्रहास्त्वपानः स्यात् ।
मध्ये यो विच्छेदस्तयोः समान इति सम्मतः सिद्धैः ॥१२॥

मध्योर्ध्वगाम्युदानो वह्निमयः प्लोषको विकल्पानाम् ।
व्यानश्च विश्वपूर्णः परो विमर्शो मतो महेशस्य ॥१३॥

जाग्रत्स्वप्नपदस्थे सकले प्राणो यथा तथापानः ।
प्रलयाकले सुषुप्तौ समाननामा विजृम्भते प्राणः ॥१४॥

आसादाख्यं च ततस्तुर्यपदे जृम्भण ह्युदानस्य
तुर्यातीते च शिवे व्यानाख्यो जृम्भतेऽकले प्राणः ॥१५॥
भिन्नस्यैव हि जगतः सृष्टौ कृत्येऽधिदैवतं ब्रह्मा ।
तस्यैव स्थितिकृत्ये विष्णू रुद्रस्तु भेदसंहारे ॥१६॥
ईशः पिधानकृत्ये सादाख्योऽनुग्रहे च पञ्चमके ।
कारणपञ्चकमेतद्विज्ञेयं लोकाशास्त्रविख्यातम् ॥१७॥

इति नवममाह्निकम् ।

अथ प्रत्यभिज्ञोपायनिरूपणं नाम दशममाह्निकम्—

मलहान्युपायजालं त्रिकादिशास्त्रोपदिष्टमिह यत्तु ।
पशुबुद्धेर्वैचित्र्याच्चित्रं तत् सद्गुरोर्मुखाद्वेद्यम् ॥१॥
सालम्बनो विकल्पस्वरूपकः स्यदुपाय इह यो यः ।
कथितोऽसावाणव इति तस्य ध्यानादयः प्रकाराः स्युः ॥२॥
शाक्तस्तु विकल्पमयोऽप्यालम्बनशून्यभावनारूपः ।
अविकल्पसमावेशः शिवतायाः शाम्भवः पुनः स्वस्याः ॥३॥
आणव इह मन्दानां मध्यानां शाक्तभावनारूपः ।
तीव्राणां चोपायः शाम्भव इति चिन्तनेन परिशून्यः ॥४॥
अतितीव्रभक्तिभाजामिह झगिति निरर्गलो जगद्भरितः ।
अनुपायमेव सँविद्रूपः प्रख्याति पूर्णशिवभावः ॥५॥
सततं प्रकाशमाने शिवनाथे स्वप्रकाशपरिपूर्णे ।
शुद्धे संविद्रूपे कथमिव यायादुपायतां मलिनम् ॥६॥
स्वातन्त्र्यस्य विलासः शिवनाथस्यैव येन तत्त्वं स्वम् ।
विस्मृतिपथमुपनीतं पुनरपि तदुपायतः स्मरञ्जयति ॥७॥
मन्दोऽपि क्रममाणः क्रमेण तां भूमिकां समभ्येति ।
यत्रोपायापेक्षां विनैव संवेत्ति पूर्णशिवभावम् ॥८॥
भक्तिश्चैका शस्ता सिद्धेर्मूलं ह्युपायजालानाम् ।
न विना भक्तिं किमपि क्वापि हि लिद्धयत्युपायकं जन्तोः ॥९॥
कुर्वन्ति यदाऽघोरा जीवं शक्तय उपायरुचिशीलम् ।
तस्मिन्नेव निमेषे घोरतराः पातयन्ति भोगेषु ॥१०॥
विघ्नानां प्रशमार्थं भक्तिस्तेषां प्रशस्यते शैवे ।
भक्तिर्भुक्तिं मुक्तिं शिवभावं सर्वतोऽपि वा दद्यात् ॥११॥

भक्तिस्त्वेव हि परमानुग्रहलीला सदा महेशस्य ।
भक्त्यैव शास्त्रबोधो भक्त्या लभ्यश्च सद्गुरुः शीघ्रम् ॥१२॥

भक्त्यैव मन्त्रदीक्षा लभ्या मन्त्राश्च वीर्यवन्तः स्युः ।
भक्त्या गुरुत्वलाभः किं स्याल्लोके न यद्भवेत् भक्त्या ॥१३॥

इति दशममाह्निकम् ।

अथोपसंहाराख्यमेकादशमाह्निकम् —

अवधार्यैतत् सम्यग् जनोऽत्र तूर्णं विचिन्तयेदेवम् ।
स्वातन्त्र्येण विलासाच्छिवभावो विस्मृतो मया स्वीयः ॥१॥

तत एव भेददर्शी धर्माधर्मादिशृंखलाबद्धः ।
सुखदुःखभोगभागी संसारी तुच्छशक्तिशीलोऽहम् ॥२॥

दिष्ट्यानुग्रहशक्तिः शिवेन सा पातिताऽधुना तु मयि ।
येन रुचिर्मे शास्त्रे भक्तिर्मे वर्धतां शिवे सुतराम् ॥३॥

भक्त्या सद्गुरुसेवां कुर्यां दीक्षामवाप्नुयां शैवीम् ।
विचरंश्च शैवमार्गे शमयन् कष्टान्यशेषतः स्वानि ॥४॥

व्यवहारे स्वातन्त्र्यं लभमानो देशभक्तिमपि कुर्वन् ।
सुखयन्निजं च राष्ट्रं साक्षात्कुर्यां परं स्वरूपं तत् ॥५॥

लोकस्य हितं कुर्वन् परिरक्षन्नार्यशास्त्रमर्यादाः ।
कृतकृत्यतां लभेय स्वविलासं सर्वतस्ततः पश्यन् ॥६॥

एवं यस्य श्रद्धा तस्य तु विघ्नाः क्रमेण शाम्यन्ति ।
भवति च बुद्धिः स्वच्छा शिवभक्तिर्गाढ़तां ततो याति ॥७॥

जीवनयात्रा च ततः सुखमयतां याति तुष्टिरभ्येति ।
भवति च विषयविरक्तिः परोपकारे च रक्तिरपि तस्य ॥८॥

तीव्रश्च शक्तिपातस्तस्मिन् सद्यस्ततो ध्रुवं भवति ।
तेनैव याति देहे तिष्ठन्नपि तूर्णमेव शिवभावम् ॥९॥

देहान्ते भैरवतां याति शिवे वा तदा लयं याति ।
शैवं परमैश्वर्यं शिवमयतायां ततश्चिरं भुंक्ते ॥१०॥

तस्माच्छास्त्रं शैवं समुपास्यं भुक्तिमुक्तिफलदायि ।
स्वातन्त्र्यनादमधुरं स्वातन्त्र्यव्यञ्जकं सुभक्तानाम् ॥११॥

अब्ध्यग्न्याकाशशरे वर्षे सप्तर्षिसंज्ञके नभसि ।
गीतिशताभ्यमेतल्ललितं शास्त्रं विनिर्मितं शैवम् ॥१२॥

स्वातन्त्र्यमात्रमूर्तेः स्वात्मशिवस्य प्रसादसुमुखस्य ।
परमं यत् स्वातन्त्र्यं निरूपितं तन्मनाक् स्वतन्त्रेण ॥१३॥

स्वातन्त्र्यप्रतिबिम्बं दर्पणकल्पेऽत्र शैवशास्त्रे स्वम् ।
सम्यक् प्रत्यवमृश्य प्राप्नुत कृतकृत्यतां बुधा नितराम् ॥१४॥

स्वस्वातन्त्र्यविलासं ज्ञातुं चेदिच्छथाधिकं सुजनाः ।
पठत तदात्मविलासं श्रीगुरुवदनारविन्दतो गलितम् ॥१५॥

कश्मीरदेशजन्मा शिवशास्त्ररुचिर्महेशपादरतिः ।
निरमाद् बलजिन्नाथः शास्त्रं यत्तेन मोदतां शम्भुः ॥१६॥

इत्येकादशमाह्निकम् ।

समाप्तमिदं शास्त्रं बलजिन्नाथेन

विरचितम् ।

---